# प्रीतगौरीगिरीशम्

संस्कृतसांगीतिकम्

रचयिता

**कण्टकार्जुनः**



**ज्ञानमुद्रा, पुणे**

# प्रीतगौरीगिरीशम्

संस्कृतसांगीतिकम्

*रचयिता*

**कण्टकार्जुनः**



**ज्ञानमुद्रा, पुणे**

*प्रीतगौरीगिरीशम्*

**सांगीतिकस्य अस्य प्रयोगं चिकीर्षवः पूर्वं तत्प्रणेतुः अनुमतिं प्राप्नुयुः**
**अनन्तरनिर्दिष्टे संकेते पत्रं प्रेष्य--**
**कृष्ण श्री. अर्जुनवाडकर**
**'देवाङ्गिनी' । ११९२ शुक्रवार पेठ । सुभाषनगर (३) ।**
**पुणे ४११ ००२ ।**



*प्रकाशकः*
ज्ञानमुद्रा । १८४७ सदाशिव पेठ । दाते वाडी । पुणे ४११ ०३०

*संगणक-अक्षरयोगः*
ज्ञानमुद्रा । १८४७ सदाशिव पेठ । दाते वाडी । पुणे ४११ ०३०

*मुद्रकः*
महाराष्ट्र मुद्रणशाळा छापखाना । १७८६ सदाशिव पेठ । पुणे ३०

**मूल्यं ५ रूप्यकाणि**

# प्रास्ताविकम्

विरलाः संस्कृते पद्यप्रबन्द्धारः ये चरणान्तयमकं प्रयोजयन्ति; विरलाश्च मराठ्यां पद्यप्रबन्द्धारः ये चरणान्तयमकं न प्रयोजयन्ति । किमत्र कारणम्? भाषास्वभावः एवात्र प्रधानं कारणम् । 'मन, धन' एतयोः शब्दयोः यमकं यस्यां कस्यामपि विभक्तौ मराठ्यां संभवति; संस्कृते प्रथमायामपि न संभवति, रूपवैरूप्यात् । आख्यातेषु आत्मनेपद-परस्मैपदभेदात् समानयोरपि पुरुषवचनयोः यमकं न संभवति, अभिन्नेऽपि सति आख्याते । समासतः, दुर्घटं संस्कृते चरणान्तयमकम् । तथाहि काव्यक्षेत्रे तत्प्रयोक्तारः हस्ताङ्गुलिमेयाः एव दृश्यन्ते जयदेवसदृशाः, स्तोत्रसाहित्ये च शंकराचार्यसदृशाः । तेषामपि प्रबन्धेषु यमकबन्धनं तस्मादेव कारणात् रूपविशेषैः वर्णविशेषैश्च नियन्त्रितं दृश्यते । इत्थंगते यदि कश्चन कविः यमकं साधयेदपि, स प्रायेण प्रसादाय तिलाञ्जलिं दत्त्वैव साधयेत् ।

अपि च विरलाः संस्कृते पद्यप्रबन्द्धारः ये 'अनार्याणि' (आर्यावर्जानि) मात्रावृत्तानि प्रयोजयन्ति; विरलाश्च मराठ्यां पद्यप्रबन्द्धारः ये मात्रावृत्तानि न प्रयोजयन्ति । न चात्र भाषास्वभावः कारणम्; किंतु परंपरैव । यदि एवं न अभविष्यत्, कथं पूर्वे संस्कृतकवयः उदासीनाः अभविष्यन् वैविध्यमयेषु, तालसंगीतानुकूलेषु च मात्रावृत्तेषु? ये तु मात्रावृत्तग्रथिताः संस्कृतबन्धाः उपलभ्यन्ते, ते प्रायेण अर्वाचीनानामेव । संगीतानुकूलाः हि बन्धाः विचरन्ति जनानां रसनासु, जनयन्ति च जीवने भाषासाहित्ययोः स्थैर्यम् ।

इदमेव मनसि कृत्वा रचितः अयं मया संगीतप्रयोगानुकूलः प्रबन्धः, कविकुलगुरोः कालिदासस्य कुमारसंभवं महाकाव्यम् अधिश्रितः । तत्र यथा वृत्तयमकयोः विषये, तथा अन्येष्वपि केषुचित् अंशेषु स्वातन्त्र्यं मया स्वीकृतम्, प्रबन्धस्य अस्य स्वरूपं प्रयोजनं च विमृशता । तथाहि--नवानि कानिचित् पद्यानि प्रसंगोचितानि संवेशितानि, येषां मूले

आधारः न विद्यते । उमाबटूनां दीर्घाणि भाषणानि विच्छिद्य लघूकृतानि, महाकाव्यानुकूलान्यपि न तादृशानि नाट्यानुकूलानि इति कृत्वा । 'कविना रसपरतन्त्रेण भवितव्यम्' इति हि अभियुक्तानां वाचोयुक्तिः । पदयोः संधिः यत्र प्रसज्यते, तत्रापि वृत्तापेक्षया क्वचित् क्वचित् स्वातन्त्र्यं स्वीकृतं, 'संहिता वाक्ये विवक्षामपेक्षते' इति वैयाकरणकुलसमयम् अनुसरता । ईदृशेषु स्थानेषु वृत्तं भज्येत, यदि संधिविच्छेदः तत्कृतश्च विरामः नाद्रियेत । एतद् हि प्रयोजनापेक्षम्, न अशक्तिकृतम् । अस्त्येव हि मया प्रकटिता ईदृशेषु अंशेषु मदीया भूमिका 'कण्टकाञ्जलिं' प्रस्तुवता वर्षपूगात् पूर्वम्—न युक्तं साहित्यं निगलयितुं गुरुभाराभिः परंपराभिः इति ।

बहोः कालात् पूर्वं संगीतसंयोजनं कृत्वा संस्कृतरसिकानां पुरतः पुण्यपत्तने प्रस्तुतः अयं प्रबन्धः संप्रति प्रथममेव मुद्रितः उपहारीक्रियते विशालाय संस्कृतसाहित्यविश्वाय । प्रयोजयन्तु संस्कृतज्ञाः एतं रङ्गमन्दिरे यथासंभवं संगीतसनाथं नृत्यसनाथं च कृत्वा, प्रकटयन्तु च तद्विषये स्वाभिप्रायम्, इति सविनयम् आवेदयति—

पुणे / दि. १-१२-१९९३ — *कण्टकार्जुनः*



# प्रीतगौरीगिरीशम्

नान्दी

१ **मन्दाकिनीव दिविजा गुरुभिस्तपोभिः**
**आराधिता भुवमुपेत्य जनस्य भूत्यै ।**
**मातेव वत्सलतमा परिपालयन्ती**
**सा भारती भगवती शिवमातनोतु ॥**

(नान्द्यन्ते प्रविशति सूत्रधारः)

सूत्रधारः

**एवम् आर्यमिश्रेभ्यः निवेदयामि । अद्य भवतां पुरतः महाकवि-कालिदासप्रतिच्छायकं कण्टकार्जुनप्रणीतं प्रीतगौरीगिरीशं नाम गीतनाट्यं प्रयोक्तुम् उद्यताः वयम् ।** (आकाशे) **किं भणथ? कोऽयं कण्टकार्जुनो नामेति?—ननु यः कण्टकाञ्जलेः मुक्तककाव्यस्य प्रणेता, कण्टकाशिनां परममित्रम्, यदुपज्ञा कण्टकाख्या परिहास-काव्यरीतिः । प्रथितं चास्य गौरीगिरीशगोचरं मुक्तकम्—**

*'नासौ गोत्रमवैति, न प्रवरकान्, नाप्याह पित्रादिकान्,*
*संवृत्तं यदि वा न वोपनयनं?—केनापि न ज्ञायते ।*
*नामान्यस्य बहूनि; हन्त! विचितः कुत्रैष धूर्तो वरः?—'*

(आकाशे) **किं भणथ? किमत्र प्रकृतगोचरम् इति? इदं तु धूर्तशिरोमणेः काञ्चीकापटिकस्य वर्णनं प्रतिभाति इति?—ननु अयुक्तम् अभिप्रायप्रकटनम् अर्धश्रुते काव्ये । काव्यशेषस् तावत् श्रूयताम्—**

*सख्या नर्मणि मङ्गला स्मितमुखी कुर्यात् सदा मङ्गलम् ॥*

(कण्टकाञ्जलेः)

(आकाशे) किं ब्रूथ? किम् इदानीम् अपि परिहासः एव प्रस्तूयते इति?–शान्तं पापम् । को नाम विमृश्यकारी जगतः पित्रोर् मङ्गले नामनी परिहासेन मिश्रयेत्? तत्रापि कालिदासपदेषु निविष्टपदः? एकं तु अत्र अवधेयम्–यदा हि अनुकार्यः एव परिहासे गृहीतरसः, न तत्र अनुकर्ता दूषणीयः भवति । (नेपथ्ये संगीतस्वराः उच्चरन्ति, तान् शृण्वन्) अये, स्मारयति मां कुशीलववर्गः–नायं व्याख्यानकालः, प्रयोगकालः अयम्, इति । (पुरतः दृष्टिं व्यापारयन्) अस्वस्थाश्च प्रेक्षकाः अपि । तत् तावदेव निष्क्रामामि, यावत् तेषां करतालकल्लोले न मे वाणी निमज्जति, ददामि चावसरं कथां प्रस्तुवतः एतस्य किंनरयुगलस्य प्राप्तावसरस्य ।

(निष्क्रान्तः)

किंनरः किंनरी च

२ श्रूयतां चरित्रकौतूहलम् ।
अनन्यविषयम् अभिन्नवपुषोः प्रेम ययोर् मङ्गलम् ।
श्रूयतामिदं जगतः पित्रोश् चरित्रकौतूहलम् ।।

३ गाहमानः पूर्वमपरं जलनिधिं शैलेश्वरः ।
मानदण्ड इव क्षितेः स विराजते हिमभूधरः ।।

४ यत्र भिन्नशिखण्डिबर्हः सुरसरित्स्रोतःसखः ।
देवदारुवनाद् वहन् हरति क्लमं पवनः सुखः ।।

५ पवनः सुखः शमयेदयं हृदयं ममेति सतीपतिः ।
व्यदधात् पदं विपिनेषु तत्र, तपःसमाधिषु तन्मतिः ।।

६ स्यां भवस्य भवान्तरेऽपि कुटुम्बिनीति दृढान्तरा ।
प्राभवद् हिमवत्सुतेति सती तदेकमतिस्थिरा ।।

७ सा व्यवर्धत धूर्जटिस् तपसा समं हिमवत्सुता ।
यौवनं मधुरं श्रिता, वपुषः प्रकर्षमुपागता ।।

८ नारदस्य मुखाद् विदित्वा तामतीतां भाविनीम् ।
शर्वभार्याम्, अकृत गिरिराट् तां महेशाराधिनीम् ।।

९ अप्यबोधवती भवान्तररूढभाववशाद् उमा ।
अन्वभूद् अतुलं रसं तदुपासने नियतक्रमा ।।



उमा

१० भगवन्, सेवेयं गृह्यताम् ।।
प्रभो त्रयाणां जगतां प्रभवसि,
सुरान् स्वकर्मणि ननु योजयसि,
गजकृत्तिधरो विजने निवससि,
अपूर्वम् एतत् के जानताम्? ।।

११ ईशावास्यमिदं चेत् सकलम्,
तवैव सलिलं तवैव कमलम्,
त्वदीयकैस् तव पूजनमखिलं
कथ्यतां कथमिव संपद्यताम्? ।।

१२ फलं हि तपसां भवदायत्तम्,
ध्यायन्ति च मुनयस् तव रूपम्,
स्वयं तपस्यसि कुरुषे ध्यानम्,
साधना किमर्थमियमुच्यताम् ।।

१३ नाहं त्वां जानामि तत्त्वतः
यस् त्वमृषीणामप्यनवगतः,
यथाश्रुतं तव अर्चने रतः
जनोऽयं कृतार्थतां नीयताम् ।।

किंनरः किंनरी च

१४ उमां प्रवृत्तां शिवं सेवितुं दृष्ट्वा मकरध्वजः ।
मधुद्वितीयः शिवजिगीषया स्थाणुवनं प्रस्थितः ।।

१५ आत्मानम् आधाय जजृम्भे मधुर्वने सत्वरः ।
आकालिकमपि अभिननन्द तं सर्गः सचराचरः ।।

सखी उमा च

१६ कुञ्जे कुञ्जे विपिने विपिने सपदि पुष्पिता द्रुमाः,
अकाले कथं वसन्तागमः? ।।

सखी

१७ अयमगणितसमयो रविः प्रयात्युत्तराम्,
किमकस्माद् विसृजति गन्धवहं दक्षिणा–

निःश्वासं दीर्घं वञ्चितेव समदना?
विनापि रमणीपादाघातम् अशोकपुष्पोद्गमः ।।

उमा

१८ नवचूतसायकः प्रवालपत्रैर् युतः,
षट्पदैर् मनोभवनाम्ना ननु अङ्कितः,
मत्तोऽयं कूजति पिकः पञ्चमं श्रितः—
'मानिनि, मानं मुञ्च वल्लभे, कोऽयमनिष्टः क्रमः?' ।।

सखी

१९ वितनुते मधुश्रीर् भ्रमरैर् नेत्राञ्जनम्,
निटिले विन्यस्यति तिलकम् अतिशोभनम्,
अरुणेन रञ्जयति किसलयमधरद्वयम्,
मलयानिलसंगता च रमते, नास्ति कस्यचित् क्लमः ।।

उमा

२० मधु पिबति मधुकरद्वन्द्वमभिन्ने सुमे,
शृङ्गेण च हरिणीं कृष्णः कण्डूयते,
गण्डूषं वितरति रसतः करिणी प्रिये,
उच्छिष्टं यच्छति प्रियायै बिसं जलविहङ्गमः ।।

किंनरः किंनरी च

२१ उद्दीप्य रतौ वृक्षवीरुधो द्विपदान् पशुपक्षिणः ।
अकुण्ठितगतिः ससर्प मदनो जयाय पुरवैरिणः ।।
२२ तावदागता सखीसमेता गौरी गजगामिनी ।
शुभगात्री शमरतस्य शंभोश् चेतःसंधुक्षिणी ।।
२३ व्यापारितवान् उमाधरोष्ठे स्थाणुः स्निग्धां दृशम् ।
लज्जामधुरं पुलकितदेहं गौर्या तिर्यक् स्थितम् ।।
२४ अथात्मवान् इन्द्रियप्रमाथं बलवन्निगृहीतवान् ।
विकृतिनिमित्तं द्रष्टुं दृष्टिं परितोऽसौ दिष्टवान् ।।
२५ पुष्पसायकं प्रहर्तुमभ्युद्यतं तस्य पश्यतः ।
स्फुरन्नुदर्चिस् तृतीयनेत्रात् सामर्षस्योद्गतः ।।



२६ 'भगवन्! संहर संहर कोपम्!' — मरुतः खे उदगिरन् ।
तावन्मदनो ददृशे तस्मिन् भस्मशेषतां व्रजन् ।।
२७ दग्ध्वा मदनं तपसो विघ्नं त्रिलोचनोऽन्तर्हितः ।
स्वगृहान् छून्यान्तरा शैलजा भग्नाशा प्रस्थिता ।।

उमा

२८ भगवन्, भवसि कथं निष्ठुरः?
कृपायाः शुष्कः किं निर्झरः? ।।
२९ पुण्यैः सलिलैः प्रोक्षिते चिरम्
द्रुमे संभृतम् एकं कुसुमम्,
अनाघ्रातमर्पितं चरणयोर् अनन्यया निष्ठया,
तत् त्वया उत्सृष्टं हेलया ।।
३० भक्तवत्सलः प्रभो कीर्त्यसे,
आर्तिहरस् त्वं हरः स्मर्यसे,
विश्वस्य क्षेमाय करुणया हालाहलमशितवान्
कथं मयि भवति नृशंसो भवान्? ।।
३१ मनसा वचसा वपुषा नित्यं
त्वत्पदकमलं मया सेवितम्,
तवैव पदयोर् निवेदितवती आत्मानम् आत्मना,
ईशिषे त्वमेव तस्याधुना ।।
३२ चकोर इव चन्द्रस्य मयूखान्
चातक इव जलधरजलवर्षान्
अवेक्षमाणः प्रेमासारांस् तव भोः क्रन्दत्ययं
ममात्मा, मा कुरु कालात्ययम् ।।
३३ एहि एहि भोः प्राणाधीश्वर!
देहि दर्शनं नयनानन्दन!
आप्यायय मां कृपाकटाक्षैस् सिञ्च स्पर्शामृतम्,
जनमिमं पुनरुज्जीवय मृतम् ।।

किंनरः किंनरी च

३४ अथ च क्रमाद् अनपेक्ष्य सा सुकुमारतां वपुषः पराम् ।

मन आदधे निशिते व्रते अतिवर्तिनी महतो मुनीन् ।।
३५ अथ धारयन् अजिनं पलाशं ब्रह्मवर्चसमुज्ज्वलः ।
प्रथमाश्रमस् तनुमान् वनं प्रविवेश कोऽपि जटाधरः ।।

बटुः

३६ हंहो, अतिथिरहं संप्राप्तः,
अध्वानम् उल्लङ्घ्य सुदीर्घं जातोऽस्मि परिश्रान्तः ।।

उमा

३७ स्वागतम् अतिथये, स्वागतम् ।
भगवन्, अर्घ्यमिदं गृह्यताम् ।
आगमनेन तवायमाश्रमः संप्राप्तो धन्यताम् ।।
३८ यथासुखम् आस्थाय विष्टरम्,
अध्वश्रममपहाय समूलम्,
भक्त्यार्पितमेतत् फलमूलं यथेष्टमासेव्यताम्,
भगवन्, अर्घ्यमिदं गृह्यताम् ।।

बटुः

३९ सूनृतया ते गिरैव विहितम्,
आतिथ्यम् अध्वश्रमहरणम्,
फलमूलादिरयं पुनरुक्तिं संभारः संश्रितः
हन्त भोश् चिरादस्मि निर्वृतः ।।

उमा

४० यद्यदाश्रमे वस्तु संस्थितम्,
तत् तत् आर्यस्यैवात्मीयम्,
विमृश्य एवं विना यन्त्रणं सर्वम् उपभुज्यताम्,
भगवन्, अर्घ्यमिदं गृह्यताम् ।।

बटुः

४१ आस्ताम्, अपि ते तपो वर्धते?
तपःसाधनं सुखं लभ्यते?
तपसि तपस्विनि! किं प्रवर्तसे अनतिक्रान्ता बलम्?



शरीरं प्रथमं व्रतसाधनम् ।।

उमा

४२ आशिष्टम् आर्येण यथेदम्
तथा वर्तति सकलम् अनघम्,
अपि विद्यासाधनम् आर्य ते अनपायं वर्तति?
गुरुस् ते कुशली ननु वर्तति? ।।

बटुः

४३ भगवति त्वया पृष्टः कुशलं
नितरां गौरवमारूढोऽहम्,
अनर्थकामं त्वया सेवितो धर्म इवाहं गतः
प्रतिष्ठां महतीं सुकृताश्रितः ।।
४४ सस्नेहं भाषितः सत्कृतः
आत्मीयोऽहं तव संवृत्तः,
अन्यभावनां भवती कर्तुं न जनेऽस्मिन् अर्हति,
सतां खलु साप्तपदी संगतिः ।।
४५ धृष्टतां मम क्षन्तुम् अर्हसि,
यदि न रहस्यं वक्तुम् अर्हसि,
प्रकृतिचापलात् किमपि प्रष्टुम् उत्सहते मे मतिः.
क्व न स्यात् कुतूहलानां गतिः? ।।

सखी

४६ भगवन्, भवतो यद् वक्तव्यं
विना यन्त्रणं तत् प्रष्टव्यम्,
तपोधनानां किमिव रहस्यं यद् यत्नाद् गोप्यताम्,
साध्वसं विमुच्य संभाष्यताम् ।।

बटुः

४७ विधातुः कुले जन्म ते, अद्वितीयं
वपुः शोभनं, कान्तिमद् यौवनम् ।
अयत्नेन सिद्धा विभूतिर् विशाला,
अवाप्यं तपोभिः किमस्मात् परम्? ।।

४८ किमर्थं शुभे यौवने त्यक्तभूषं
श्रितं वार्धकार्हं त्वया वल्कलम्? ।
प्रदोषे स्फुटचन्द्रतारागणा चेत्
प्रभातायते रात्रिरत्याहितम्! ।।
४९ किमु स्वर्गलाभार्थमेष प्रयत्नः?
अये, देवभूमिः पितुः स्वं तव! ।
वरम् ईहसे किम्?–मुधा तत् तपस् ते,
मणिर् मृग्यते, जातु नान्विष्यति ।।

(उमा दीर्घं निःश्वसिति)

५० आम्, ज्ञातम्, ननु ते निःश्वसितं
यथार्थयति मे चरमतर्कितम् ।
विश्वसिति मनो नैव, नेक्ष्यते प्रार्थनार्ह एव ते,
कथं स्याद् दुरवापः प्रार्थितेे? ।।
५१ कियच्चिरं हे गौरि क्लाम्यसि?
तपसोऽर्धं मे लब्धुमर्हसि ।
येन प्राप्स्यसि काङ्क्षितं वरं, परंतु कोऽसौ जनो
न यस् त्वां द्रष्टुं कुरुते मनः? ।।

(सप्रतीक्षम्)

५२ अस्तु, क्लेशकरो विषयस् ते,
यथा त्वयैवं जोषमास्यते ।

सखी

मैवं भगवन्, अस्मिन् विषये सा ननु लज्जावती
प्रवक्ष्ये तदाशयं जानती ।।

बटुः

(सस्मितम्)

५३ एवम्? युक्तम्, कथयतु भवती.

सखी

श्रूयताम्, इयं व्रतं धृतवती ।



इन्द्रादीन् अवमत्य मानिनी काङ्क्षति लब्धुं वरं
स्मरारिम् अरूपहार्यं हरम् ।।
५४ नान्यमुपायं तदभिगमार्थं
पश्यन्ती वनमिता तपोऽर्थम् ।
तरवोऽप्यनया रोपिताः फलं दधति तपःसाक्षिणः,
न चास्याः कामा उद्वेदिनः! ।।

बटुः

५५ अयि सत्यमिदम्? परिहासो वा?

उमा

सत्यं नैष्ठिक, यत् श्रुतं त्वया ।
उच्चैःपदलङ्घने समुत्का व्रते स्थिता मे मतिः,
अकुण्ठा मनोरथानां गतिः ।।

बटुः

५६ सम्यग् ज्ञातो महेश्वरो मे,
अमङ्गलरतिः प्रथितः स उमे ।
अहो बत! त्वं तदर्थिनी पुनरेतत् तनुषे व्रतम्?
तापसि, त्वामनुमोदे कथम्? ।।

उमा

५७ विपद्ध्वस्तये भूतिलब्धये
मङ्गलसेवी जनः स्वस्तये.
जगच्छरण्यो गताभिलाषः आशोपहतात्मनाम्
अनुसरेत् कथमिव वृत्तिम् इमाम्? ।।

बटुः

५८ विवाहकौतुकधरस् तव करः,
तस्य च वलयीकृतभुजगधरः,
त्वं हंसाङ्कक्षौमधरा स त्ववद्गजाजिनधरः
संगमः कथमनयोः सुन्दरः? ।।

उमा

५९ विभूषणधरं भुजगधरं वा,
क्षौमधरं गजकृत्तिधरं वा,
कपालशेखरमुत शशिशेखरमनवधारणोचितं
शरीरम् अनन्तमूर्तेः स्थितम् ।।

बटुः

६० अलक्तकाङ्कौ चरणौ किमु ते
चरतां पितृकानने अपूते?
हरिचन्दनपात्रयोः किमु तव स्तनयोः कुरुतां पदं
चिताया भसितं तदुरःस्थितम्? ।।

उमा

६१ अकिंचनः सन् संपत्प्रभवः,
श्मशानवसतिस् त्रिजगदीश्वरः,
स भीमरूपः शिवः कथ्यते; न सन्ति ते ये विदुस्–
तत्त्वतः किंरूपः स प्रभुः ।।

बटुः

६२ विडम्बना ननु गजमारूढा
यदा भविष्यसि तेनोढूढा
वृद्धोक्षम् आस्थितां तदा त्वां दृष्ट्वा स्मेराननः
भविष्यति वरगात्रि महाजनः! ।।

उमा

६३ चिताभस्म तच्छरीरच्युतं
भूषयति स्वर्गिणां मस्तकम्,
अकिंचनस्य हि वृषारोहिणस् तस्य पदं मौलिना
स्पृशति सुरपतिर् मुक्तवाहनः ।।

बटुः

६४ विरूपाक्षता रूपं कथयति,
दिगम्बरत्वं वसु सूचयति,



जन्म न लक्ष्यं, वरेषु यद् यन् मृगनेत्रे मृग्यते
तदस्मिन् व्यस्तमपि न लक्ष्यते ।।

उमा

६५ दोषविवक्षुरपि त्वमवोचः
एकम् ईशं प्रति साधु वचः.
अयि च्युतात्मन्! आत्मभुवोऽपि हि वदन्ति यं कारणं
कथमिव ज्ञास्यसि तत्कारणम्? ।।

बटुः

६६ कलेव शशिनः कान्तिमती त्वं
मा व्रज तेन भृता शोच्यत्वम्,
कुत्र तद्विधः श्मशानशूलः? क्व वैदिकी सत्क्रिया?
मुच्यताम् इयमसती प्रक्रिया ।।

उमा

६७ न वेत्सि परमार्थतो महेशम्,
कुरुषे वाग्विस्तरं बालिशम्.
अलोकतुल्यम् अचिन्त्यमूलं चरितं हि महात्मनाम्;
न वेद्यं तदस्ति मूढात्मनाम् ।।

६८ अस्तु स आस्तां यथा मतस् ते,
तस्मिन्नेव मनो मम रमते!

बटुः

किंतु–

उमा

–निवारय सखि, बटुमेतं महताम् अपवादकम्.
ईदृशश्रवणादपि पातकम्! ।।

६९ यास्यामि स्वयमेव वान्यतः–

(शिवः आविर्भवति)

उमा सखी च

अम्मो, भगवान् !

शिवः

अयमस्थाने भीरु संभ्रमः.
यस्मै स्पृहयसि तं परिहरसे, कोऽयं ते प्रक्रमः?
मुच्यतां सकलस् तपसां क्लमः ।।
७० अद्यप्रभृति तवाहं दासः
अवनताङ्गि! ते क्रीतस् तपसा.
हे हृदयेश्वरि! हे प्राणेश्वरि! सकृपमिमं स्वीकुरु,
कृतार्थं प्रसादवर्षैः कुरु! ।।

भरतवाक्यम्

७१ वाचामर्थैः सह परिणतः शंतमो यत्र बन्धः,
कण्ठाश्लेषं रसयति धरा दिव्यलोकस्य यत्र ।
यत्र प्रेमा विहरति तपश्चर्यया, शश्वदुह्यात्
तद्वाक्स्रोतः कविकुलगुरोः प्रीतगौरीगिरीशम् ।।

---

**Prīta-gaurī-girīśa**

Based on Kālidāsa's Kumārasaṁbhava,
*Prīta-gaurī-girīśa*
is a Sanskrit opera of about an hour's duration
by Kaṇṭakārjuna, the author of Kaṇṭakāñjali,—
which opened up new horizons, more than 25 years' ago,
in tradition-bound modern Sanskrit Literature.
The opera draws material from the famous epic
and presents it in a new garb consisting of
dialogues, *mātrā* metres and end-rymes
offering a wide scope for vocal recital
or stage presentation accompanied by music and dance.

First Published
December, 1993

Price Rs. 5


Krishna S. Arjunwadkar
1192 Shukrawar Peth, Subhash Nagar (3)
Pune 411 002

Copies can be obtained from
Dnyana Mudra
1847 Sadashiv Peth, Date vadi,
Pune 411 030